॥ चतुर्वेदोपनिषत् ॥

ॐ अथातो महोपनिषदमेव तदाहुः । एको ह वै नारायण आसीत् ।
न ब्रह्मा न ईशानो नापो नाग्निः न वायुः नेमे द्यावापृथिवी न
नक्षत्राणि न सूर्यः । स एकाकी नर एव । तस्य ध्यानान्तस्स्थस्य
ललाटात् स्वेदोऽपतत् । ता इमा आपः । ता एते नो हिरण्यमयमन्नम् ।
तत्र ब्रह्मा चतुर्मुखोऽजायत ।
स ध्यातपूर्वामुखो भूत्वा भूरिति व्याहृतिः गायत्रं छन्द ऋग्वेदः ।
पश्चिमामुखो भूत्वा भूरिति व्याहृतिस्त्रैष्टुभं छन्दः यजुर्वेदः ।
उत्तरामुखो भूत्वा भुवरिति व्याहृतिर्जागतं छन्दः सामवेदः ।
दक्षिणामुखो भूत्वा जनदिति व्याहृतिरानुष्टुभं छन्दोऽथर्ववेदः ॥
सहस्रशीर्षं देवं सहस्राक्षं विश्वसम्भवम् ।
विश्वतः परमं नित्यं विश्वं नारायणं हरिम् ॥
विश्वमेवेदं पुरुषं तं विश्वमुपजीवति ।
ऋषिं विश्वेश्वरं देवं समुद्रे तं विश्वरूपिणम् ॥
पद्मकोशप्रतीकाशं लम्बत्याकोशसन्निभम् ।
हृदये चाप्यधोमुखं सतस्यत्यैशीत्कराभिश्च ॥
तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः ।
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता ॥
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।
स ब्रह्मा स ईशानः सोऽक्षरः परमः स्वराट् ॥
य इमां महोपनिषदं ब्राह्मणोऽधीते अश्रोत्रियः श्रोत्रियो भवति ।
अनुपनीतः उपनीतो भवति । सोऽग्निपूतो भवति । स वायुपूतो भवति ।
स सूर्यपूतो भवति । स सोमपूतो भवति । स सत्यपूतो भवति ।
स सर्वैर्देवैर्ज्ञातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति ।
तेन सर्वैः क्रतुभिरिष्टं भवति । गायत्र्याः षष्टिसहस्राणि जप्तानि
भवन्ति । इतिहासपुराणानां सहस्राणि जप्तानि भवन्ति । प्रणवानामयुतं
जप्तं भवति । आचक्षुषः पङ्क्तिं पुनाति । आसप्तमात् पुरुषं पुनाति ।
जाप्येन अमृतत्त्वं च गच्छति अमृतत्वं च गच्छति इत्याह
भगवान् हिरण्यगर्भः ॥
देवा ह वै स्वर्गं लोकमायंस्ते देवा रुद्रमपृच्छंस्ते देवा
ऊर्ध्वबाहवो रुद्रं स्तुवन्ति । भूस्त्वादिर्मध्यं भुवस्ते स्वस्ते शीर्षं
विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधा त्रिधा शान्तिस्त्वं हुतमहुतं
दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं
परायणं च त्वम् । अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवा
नमस्याम धूर्तेरमृतं मृतं मर्त्यं च सोमसूर्यपूर्वजगदधीतं
वा यदक्षरं प्राजापत्यं सौम्यं सूक्ष्मं ग्राह्यं ग्राह्येण भावं भावेन
सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण ग्रसति तस्मै महाग्रासाय नमः ॥

इति चतुर्वेदोपनिषत् सम्पूर्णा ।